# Ashta Bhairava Dhyana Stotram



# अष्टभैरव ध्यानस्तोत्रम्

## Sanskrit Document Information

Text title : Ashta Bhairava Dhyana Stotram

File name : aShTabhairavadhyAnastotram.itx

Category : shiva, dhyAnam

Location : doc_shiva

Latest update : July 19, 2019

Send corrections to : sanskrit@cheerful.com



July 19, 2019

*sanskritdocuments.org*

# अष्टभैरव ध्यानस्तोत्रम्



भैरवः पूर्णरूपोहि शङ्करस्य परात्मनः ।
मूढास्तेवै न जानन्ति मोहिताः शिवमायया ॥

ॐ हं षं नं गं कं सं खं महाकालभैरवाय नमः ।

नमस्कार मन्त्रः -
ॐ श्रीभैरव्यै, ॐ मं महाभैरव्यै, ॐ सिं सिंहभैरव्यै,
ॐ धूं धूम्रभैरव्यै, ॐ भीं भीमभैरव्यै, ॐ उं उन्मत्तभैरव्यै,
ॐ वं वशीकरणभैरव्यै, ॐ मों मोहनभैरव्यै ।

॥ अष्टभैरव ध्यानम् ॥

असिताङ्गोरुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः ।
कपालीभीषणश्चैव संहारश्चाष्टभैरवम् ॥

१) असिताङ्गभैरव ध्यानम् ।
रक्तज्वालजटाधरं शशियुतं रक्ताङ्ग तेजोमयं
अस्ते शूलकपालपाशडमरुं लोकस्य रक्षाकरम् ।
निर्वाणं शुनवाहनन्त्रिनयनमानन्दकोलाहलं
वन्दे भूतपिशाचनाथ वटुकं क्षेत्रस्य पालं शिवम् ॥ १॥

२) रूरुभैरव ध्यानम् ।
निर्वाणं निर्विकल्पं निरूपजमलं निर्विकारं क्षकारं
हुङ्कारं वज्रदंष्ट्रं हुतवहनयनं रौद्रमुन्मत्तभावम् ।
भद्कारं भक्तनागं भृकुटितमुखं भैरवं शूलपाणिं
वन्दे खड्गं कपालं डमरुकसहितं क्षेत्रपालन्नमामि ॥ २॥

३) चण्डभैरव ध्यानम् ।
बिभ्राणं शुभ्रवर्णं द्विगुणदशभुजं पञ्चवक्त्रन्त्रिनेत्रं
दानञ्छत्रेन्दुहस्तं रजतहिममृतं शङ्खभेषस्यचापम् ।

शूलं खड्गञ्च बाणं डमरुकसिकतावह्निमालोक्य मालां
सर्वाभीतिञ्च दोर्भीं भुजतगिरियुतं भैरवं सर्वसिद्धिम् ॥ ३॥

४) क्रोधभैरव ध्यानम् ।
उद्यद्भास्कररूपनिभन्त्रिनयनं रक्ताङ्ग रागाम्बुजं
भस्माद्यं वरदं कपालमभयं शूलन्दधानं करे ।
नीलग्रीवमुदारभूषणशतं शन्तेशु मूढोज्ज्वलं
बन्धूकारुण वास अस्तमभयं देवं सदा भावयेत् ॥ ४॥

५) उन्मत्तभैरव ध्यानम् ।
एकं खट्वाङ्गहस्तं पुनरपि भुजगं पाशमेकन्त्रिशूलं
कपालं खड्गहस्तं डमरुकसहितं वामहस्ते पिनाकम् ।
चन्द्रार्कं केतुमालां विकृतिसुकृतिनं सर्वयज्ञोपवीतं
कालं कालान्तकारं मम भयहरं क्षेत्रपालन्नमामि ॥ ५॥

६) कपालभैरव ध्यानम् ।
वन्दे बालं स्फटिकसदृशं कुम्भलोल्लासिवक्त्रं
दिव्याकल्पैफणिमणिमयैकिङ्किणीनूपुरञ्च ।
दिव्याकारं विशदवदनं सुप्रसन्नं द्विनेत्रं
हस्ताद्यां वा दधानान्त्रिशिवमनिभयं वक्रदण्डौ कपालम् ॥ ६॥

७) भीषणभैरव ध्यानम् ।
त्रिनेत्रं रक्तवर्णञ्च सर्वाभरणभूषितम् ।
कपालं शूलहस्तञ्च वरदाभयपाणिनम् ॥

सव्ये शूलधरं भीमं खट्वाङ्गं वामकेशवम् ।
रक्तवस्त्रपरिधानं रक्तमाल्यानुलेपनम् ।
नीलग्रीवञ्च सौम्यञ्च सर्वाभरणभूषितम् ॥

नीलमेख समाख्यातं कूर्चकेशन्त्रिनेत्रकम् ।
नागभूषञ्च रौद्रञ्च शिरोमालाविभूषितम् ॥

नूपुरस्वनपादञ्च सर्प यज्ञोपवीतिनम् ।
किङ्किणीमालिका भूष्यं भीमरूपं भयावहम् ॥ ७॥

८) संहारभैरव ध्यानम् ।
एकवक्त्रन्त्रिनेत्रञ्च हस्तयो द्वादशन्तथा ।

डमरुञ्चाङ्कुशं बाणं खड्गं शूलं भयान्वितम् ॥

धनुर्बाण कपालञ्च गदाग्निं वरदन्तथा ।
वामसव्ये तु पार्श्वेन आयुधानां विधन्तथा ॥

नीलमेखस्वरूपन्तु नीलवस्त्रोत्तरीयकम् ।
कस्तूर्यादि निलेपञ्च श्वेतगन्धाक्षतन्तथा ॥

श्वेतार्क पुष्पमालाञ्च त्रिकोट्यङ्गणसेविताम् ।
सर्वालङ्कार संयुक्तां संहारञ्च प्रकीर्तितम् ॥ ८॥

इति श्रीभैरव स्तुति निरुद्र कुरुते ।

इति अष्टभैरव ध्यानस्तोत्रं सम्पूर्णम् ।

---

*Ashta Bhairava Dhyana Stotram*

pdf was typeset on July 19, 2019

Please send corrections to *sanskrit@cheerful.com*

